Vedanta Series No. 3.

# KATHOPANISHAD

WITH THE

SANSKRIT TEXT, ANVAYA, VRITTI, WORD MEANING,

TRANSLATION, NOTES AND INDEX

BY

SRIS CHANDRA VASU,

Published by the Panini Office
Bhuvaneshvari Asram,
Bahadurganj.
Allahabad:

PRINTED AT THE ALLAHABAD PRESS, ALLAHABAD.
1905.

Price Re. 1-8.

TO

Mrs. ANNIE BESANT

WITH THE

MOST AFFECTIONATE REGARDS

OF

THE TRANSLATOR.

# अथ यजुर्वेदीयकठोपनिषद्प्रारम्भः

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शांतिः शांतिः शांतिः ॥

हरिः ॐ

---

MANTRA 1.

॥ ॐ ॥ उशन् ह वै वाजश्रवसः सर्ववेदसन्ददौ।
तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥

अन्वयः—उशन् ( कामयमानः फलं ) हवै वाजश्रवसः ( ऋषिः ) सर्ववेदस ( सर्वस्वं ) ददौ ( दत्तवान् ) तस्य नचिकेता नाम पुत्र आस ( बभूव )

वृत्तिः—(उशन्वैवाजश्रवस इति) "उशन्" कामयमानः। वश कान्तावित्यस्माच्छतरि। ग्रहिज्येत्यादिना संप्रसारणम्। "ह" "वै" इतिवृत्तार्थस्मरणार्थौ निपातौ। फलमितिशेषः।

"वाजश्रवसः" । वाजेन अन्नेनदानादिकर्मभूतेन, श्रवः कीर्तिर्यस्य स वाजश्रवाः । तस्यापत्यं वाजश्रवसः रूढिर्वा- वाजश्रवस इति । स किल ऋषिर्विश्वजितासर्वस्वदक्षिणेन यजमानः तस्मिन् क्रतौ "सर्ववेदसं" सर्वस्वं दत्तवानित्यर्थः । उशन्नित्यनेन कर्मणः काम्यत्वाद्दक्षिणासाद्गुण्यसावश्य- कत्वमिति सूच्यते। "आस" बभूव। छन्दस्युभयथेतिलिटः सार्व- धातुकत्वात् । स्वस्तयेतार्क्ष्यमित्यादिवदस्तेर्भूभावाभावः ।

उशन् us'an (इच्छन् कामयमानः, वशधातोः शतृप्रत्यये = उश इतिरूपं) wishing, desiring (the fruit of Vís'vaji sacrifice)

ह ha ( ह वै वृत्तार्थ- स्मरणार्थौ निपातौ ) once.

वै vai, now.

वाजश्रवसः vâjas'ravasah ( वाजं = अन्नं, श्रवस = यशः, तस्य अपत्य Vâjas'ravasa, Uddâlaka.

सर्ववेदसं sarva-vedasam ( सर्वस्वं धनं ) all-wealth, all-know ledge, all the Veda instruction.

ददौ dadau ( दत्तवान् ) gave,

तस्य tasya ( यजमानस्य ) his.

ह ha (mere expletive)

नचिकेता nachiketâ, Nachiketâ.

नाम nâma, called.

पुत्रः pûtrah, son.

आस âsa ( बभूव ) was.

Desiring once (the heaven-worlds), Vajasravasa gave away all his wealth. His was a son called Nachiketas.

## MANTRA 2.

तꣳह कुमारꣳ सन्तं दक्षिणासु नीयमानासु
श्रद्धाऽऽविवेश सोऽमन्यत ॥ २ ॥

अन्वयः—तं ( नचिकेतसं ) कुमारं सन्तं ( बालमेव सन्तं ), ऋत्विग्भ्यो दक्षिणासु गोषु नीयमानासु सतीषु श्रद्धा आविवेश ( आविष्टवती ) ॥ सः अमन्यत ॥

वृत्तिः—(तंह कुमारंसन्तमिति) "तम्" नचिकेतसं "कुमारं सन्तम्" बालमेवसन्तं ऋत्विग्भ्यो "दक्षिणासु" "गोषु" "नीयमानासु" सतीषु "श्रद्धा" आस्तिक्यबुद्धिः पितुर्हितकाम-प्रयुक्ता "आविवेश" आविष्टवती। यद्यपि यदानतिकरं द्रव्यम् तद्दक्षिणेत्युच्यते। एकाचासौक्रतावानतिरिति तदुपाधिको-दक्षिणाशब्द एकवचनान्ततामेव लभते। अतएवभूनामकैकाह-क्रतौ। तस्य धेनुर्दक्षिणेत्यत्र कृत्स्नस्य गवाश्वादेः प्रकृतस्य दाक्षिण्यस्य निवृत्तिरिति। तस्य धेनुरिति गवामिति दाश-मिकाधिकरणे स्थितम्। तथापि दक्षिणाशब्दोऽयंभूतिवचनः। स च कर्मापेक्षयापि प्रवर्तते। अस्मिन् कर्मणीयं भूतिरिति। कर्तुरपेक्षयापि प्रवर्तते। अस्मिन्कर्मण्यस्यपुरुषस्येयं भूति-रिति। ततश्च ऋत्विग्बहुत्वापेक्षया दक्षिणाबहुत्वसम्भवाद् दक्षिणास्विति बहुवचनमुपपद्यते। अतएव ऋतवे यजौदुम्बरः सोमचमसोदक्षिणा स प्रियाय सगोत्राय ब्रह्मणेदेय इत्यत्र वाक्यतापत्ते ब्रह्मभागमात्रेऽपि दक्षिणाशब्दस्यावयवलक्षणा-

मन्तरेण मुख्यत्वोपपत्तेस्तन्मात्रबाध इत्युक्तं दशमे । यदि ब्रह्मणस्तद्दानं तद्विकारः स्यादित्यधिकरणे । ततश्चक्रत्वपेक्षयादक्षिणैक्येपि ऋत्विगपेक्षयादक्षिणाभेदसम्भवाद्दक्षिणास्विति बहुवचनस्य नानुपपत्तिरिति द्रष्टव्यम् ।

तं tam ( नचिकेतसं ) him (Nachiketas).

ह ha, when.

कुमारं kumâram ( प्रथम वयसं, बालं ), a boy.

सन्तं santam ( स्थितं ) being (still)

दक्षिणासु dakshi*n*âsu ( दक्षिणार्थासु ) when the presents.

नीयमानासु nîyamânâsu ( विभागेन—उपनीयमानासु, दीयमानासु ) were being given to or brought (for the priests), to be led.

श्रद्धा *s*raddhâ ( आस्तिक्यबुद्धिः ) faith, strong desire (for the welfare of his father), earnestness.

आविवेश â-vi-ves'a ( प्रविष्टवती) entered, Madhvâ's reading is विवेश without आ.

सः sa*h*, he.

अमन्यत amanyata, thought, said to himself, pondered.

Faith entered him, though still a boy, when the cows were being given as present to the priests. He thought.

MANTRA 3.

पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।
अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत् ॥ ३ ॥

अन्वयः—पीतोदकाः जग्धतृणाः दुग्धदोहाः निरिन्द्रियाः, या एवंभूता गावः ताः ऋत्विग्भ्यो ददत्, अनन्दाः ते लोकाः सन्ति नाम खलु तान् स यजमानो गच्छति ॥

वृत्तिः—अद्धाप्रकारमेवदर्शयति (पीतोदका इति) "पीत" इति "पीत" मुदकं याभिस्ताः "पीतोदकाः"। "जग्धं" भक्षितं "तृणं" याभिस्ताः "जग्धतृणाः"। "दुग्धोदोहाः" क्षीराख्यो याभिस्ताः दुग्धदोहाः। "निरिन्द्रियाः" अप्रजननसमर्थाः। जीर्णा निष्फला इति यावत्। या एवं भूता गावः। "ताः" ऋत्विग्भ्योदक्षिणाबुद्ध्या "ददत्" प्रयच्छन्। "अनन्दाः" असुखाः ते शास्त्रसिद्धा "लोकाः" सन्ति "नाम" खलु। "तान् स" यजमानो "गच्छति"। एवममन्यतेत्यर्थः।

पीतोदकाः pîtodakâ*h* ( पीतं उदकं याभिः ताः 1 ) drunk water

जग्धतृणाः jagdha-tri*n*â*h* ( भक्षितं तृणं याभिः ताः 2 ) eaten hay or grass (but cannot do so now), burnt sacrificial wood or straw.

दुग्धदोहाः dugdha-dohâ*h* ( दुग्धोदोहः क्षीराख्यो यासां ताः 3 ) given milk. milked or abstemious.

निरिन्द्रियाः nirindriyâ*h* ( अप्रजनन समर्थाः जीर्णाः 4) barren, without strength (to breed), free from passion.

अनन्दाः anandâ*h* ( अनानन्दाः, असुखाः ) Unblessed, joyless, or अः इति ब्रह्मेति श्रुतेः। अकारस्सर्ववागात्मा परब्रह्माभिधायकः॥ अकारोब्रह्म॥ अ-नन्द = ब्रह्मानन्देति अ means "Brahma", नन्द "joy", "full of Brahma-bliss."

नाम Nâma, called, surely.

ते te, those (well known).

लोकाः lokâ*h*, जन्मानि, स्थानानि, worlds, births,

तान् tân, to them, to which.

सः sa*h* ( यजमानः ), he.

गच्छति gachchhati, goes.

| | |
|---|---|
| तं | tam, him (*i.e.* to the son, the father being angry.) |
| ह | ha, (आश्चर्यें) Behold! Hâ! |
| उवाच | uvâcha, said. |
| मृत्यवे | mrityave, (यमाय वैवस्वताय) to Mrityu the son of Vivasvat. |
| त्वा | tvâ, (त्वां) thee. |
| ददामि | dadâmi, I give (Madhva's reading is ददानि let me give). |
| इति | iti, thus. (Namely the father said "Be thou dead." |

He said to his father then: "O father! to what (priest) wilt thou give me." Twice and thrice, (he asked this question). The father said to him "To Death I give thee."

### Mantra 5.

**बहूनामेमि प्रथमो बहूनामेमि मध्यमः ।**
**किꣳ स्विद्यमस्य कर्त्तव्यं यन्मयाद्य करिष्यति ॥ ५ ॥**

अन्वयः—( पुत्रः सशोकः पितरं उवाच ) बहूनां एमि प्रथमः, बहूनां एमि मध्यमः ॥ किं स्विद् यमस्य कर्त्तव्यं यत् मया अद्य करिष्यति ॥

वृत्तिः—एवमुक्तोपि पुत्रः विगतसाध्वसशोकः पितरमुवाच ( बहुनामेमीति ) सर्वेषांमृत्युसदनगन्तॄणां पुरतः मध्येवागच्छामि । नतुपश्चात् । मृत्युसदनगमनेन कोपि मम विचार इति भावः । किंतर्हीत्यत्राह ( किंस्विद्यमस्येति ) मृत्युर्यद्द्यमयाकरिष्यति । तत्तादृशंकमस्यकर्त्तव्यं किंवा । पूर्णकामस्यमृत्योर्मादृशेन बालिशेन किं प्रयोजनं स्यात् । येन अ-

त्विगभ्य इव तस्मै मद्र्पणं सफलंस्यात्। अतएतदेवानुशोचामीतिभावः।

बहूनां Bahûnâm, ( शिष्याणां, पुत्राणां, or मुख्यवृत्तिमतां मरिष्यमाणानाम् मध्ये )॥ Among many (pupils, or sons or persons of best conduct.) Persons of best conduct are those who serve their elders, unasked, whenever an opportunity of service arises. Or among the many who will die or are dying, I being the first, go to Yama.

एमि emi ( गच्छामि ) I go.

प्रथमः prathamaḥ, first.

बहूनां bahûnâm, ( मध्यमानां, मध्यमवृत्तिभाजां शिष्यादीनां ) of many (belonging to the middling class; sons, pupils &c. who serve when asked to do so).

एमि emi (गच्छामि) I go.

मध्यमः madhyamaḥ, middle. मृतानां मध्ये among many who are dead, I being the middle go to Yama. R. I go either in the front rank or in the middle of those who are going to the Yama's abode, but not the last, for many will still follow me: why should I grieve about it; when death is inevitable to all.

किम् kim, what } both together mean "Or,
स्विद् svid, ( वा ) else } on the other hand."

यमस्य Yamasya, of Yama.

कर्तव्यं kartavyam, ( प्रयोजनं ) to be done, object, necessity R What does Yama want with a stripling like me, that I am to go to him to-day: Yama is above all desires and so I can be of no use

तथा tathâ, how.

अपरे apare ( वर्तमानाः साधवः ) others (good men who are alive.)

सस्यं sasyam, corn. (This illustration shows that death is ordained for all).

इव iva, like.

मर्त्यः martyah ( मनुष्यः ) the mortal, the man.

पच्यते pachyate ( जीर्णो म्रियते ) ripens, decays and dies or becomes cooked, becomes mature, fitted.

सस्यम् इव sasyam iva, like corn. Or "as (one's) merit." R. In a short time, he decays.

आजायते âjâyate (आविर्भवति) springs up, appears (Madhva reads जायते without आ.)

पुनः punah, again (as birth and death is the fate of all creatures, I feel no grief by being given to Death—to one where I must have gone some day )

Having looked behind those who have gone before (how firm they stood on truth,) so also having looked round (those) others (who are now living, how they also never renounced truth, thou shouldst follow their example.) The mortal (man) decays like corn, and is born again like corn.

MANTRA 7.

वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् ।
तस्यैताꣳशान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७ ॥

अन्वयः—वैश्वानरः ( इव ) अतिथिः ब्राह्मणः सन् गृहान् प्रविशति । तस्य ( अग्नेः ) एतां शान्तिं कुर्वन्ति ( सन्तः ) ॥ हे वैवस्वत उदकं हर ( आहर ).

वृत्तिः—एवमुक्तःप्रेषितः प्रोषितस्य मृत्योर्द्वारि तिस्रो रात्रीरनश्नन्नुवास। ततः प्रोष्यागतं यमं द्वार्स्थाः वृद्धा ऊचुः (वैश्वानरः प्रविशतीति) साक्षादग्निरेवातिथिर्ब्राह्मणः सन् गृहं प्रविशति। तस्याग्नेरेतां पाद्यासनदानादि लक्षणां शान्तिं कुर्वन्ति सन्तः। तदपचारेणदग्धा माभूमेति। अतः हे वैवस्वत। नचिकेतसेपाद्यार्थमुदकंहर। आहरेत्यर्थः।

| | |
|---|---|
| वैश्वानरः | vais'vânara*h* (अग्निरिव) Fire (like fire.) |
| प्रविशति | pravis'ati, enters. |
| अतिथिः | atithi*h*, a guest. |
| ब्राह्मणः | brâhma*n*a*h*, (ब्रह्मज्ञानी) a Brâhmana (a knower of Brahman.) |
| गृहान् | gṛihân, in the houses दहन् इव (as if burning the houses, purifying the houses, see next verse.) |
| तस्य | tasya (दाहं शमयन्त इव) of that (burning). |
| एतां | etâm, this (offering of water for the feet, seat, &c.) |
| शान्तिं | s'ântim, peace (or quenching.) |
| कुर्वन्ति | kurvanti, they do. |
| हर | hara (आहर) bring fetch, take. |
| वैवस्वत | vaivasvata, O Vaivasvata. |
| उदकम् | udakam (नचिकेतसे पाद्यार्थम्) water (for washing the feet of Nachiketas.) |

(Then Nachiketas went to Yama. Yama had gone to another place and was not at home. The wife of Yama, offered welcome and pujá to the guest. But Nachiketas said "The host not being at home I cannot accept these

at your hand." Nachiketas thus remained for three days without food. When Yama returned, his wife sai l to him. R. Nachiketas did not enter the Palace of Yama, but remained at his gate ; the above is addressed by the gate-keepers to Yama when he returned.)

Like fire a Brahmin guest enters the house. The (wise) quench (lit. make this quenching) it thus (by peace-offerings). Fetch water O Vaivasvat.

### Mantra 8.

आशाप्रतीक्षे सङ्गतꣳ सूनृताञ्
चेष्टापूर्ते पुत्रपशूꣳश्च सर्वान् ।
एतद् वृङ्क्ते पुरुषस्याल्पमेधसो
यस्यानश्नन् वसति ब्राह्मणो गृहे ॥ ८ ॥

अन्वयः—यस्य अल्पमेधसः गृहे अनश्नन् ब्राह्मणः वसति, तस्य आशा, प्रतीक्षे, संगतं, सुनृतां, इष्टा-पूर्ते, पुत्र-पशून् च सर्वान् एतद् वृंक्ते ॥

वृत्तिः—अकरणेप्रत्यवायं च दर्शयन्तिस्म । (आशा प्रतीक्षे इति) "यस्या" "ल्पमेधसः" अल्पप्रज्ञस्य पुरुषस्य गृहे "अनश्नन्" अभुञ्जानः अतिथिर्वसति । तस्याशा प्रतीक्षे काम संकल्पा । यद्वा अनुत्पन्नवस्तु विषयेच्छा आशा । उत्पन्नवस्तु प्राप्तीच्छा प्रतीक्षा "संगतम्" "सत्संगमं" "सूनृतां" सत्यप्रियवाचं । इष्टापूर्ते इष्टं यागादि पूर्तं खातादि पुत्रान् पशूंश्च एतत् अनशन रूपं पापं "वृङ्क्ते" वर्जयति, नाश-

यतीत्यर्थः । वृजीवर्जने । रुधादित्वात् श्नम् । श्रजवनङ्गत्य-स्माद्धातोर्वादादित्वाच्छपोलुक् ।

आशा âs'â ( अनिर्ज्ञातप्राप्येष्टार्थप्रार्थना ) hopes ( प्राप्तवस्तुविषयेच्छा-श्लाशा )

प्रतीक्षे pratîkshe ( निर्ज्ञातप्राप्यार्थप्रतीक्षणं ) expectations. ( अप्राप्त वस्तुविषयेच्छा ).

संगतं samgatam ( सत्संगमं तत्संयोगजं फलं ) possessions ( सुहृत्संगतिं ) friends.

सुनृतां sunritâm ( प्रिया वाक् तन् निमित्तंच ) righteousness, ( जनकर्तृक साधुवार्तां ) good opinion of men.

च cha, and.

इष्टापूर्ते ishtâpurte (ishtam purtam. The lengthening of the vowel अ of ishta into आ ishtâ is by Pânini VI. 3 137. Ishta यजनं, यागजं, pûrtam आरामतटाकादि, ) ( fruit of) religious sacrifices (viz Deva-loka ; fruits of his) public charities (or secular liberality viz. Pitriloka.)

पुत्र-पशून् putra-pasun. Sons and cattle.

च cha and.

सर्वान् sarvân, all.

एतद् etad, this ( अनशनरूपं पापं ) the sin of fasting.

वृङ्क्ते vrinkte ( from वृजी वर्जने श्नस् विकरणं ; वर्जयति, विनाशयति ) destroys, deprives.

पुरुषस्य purushasya, of the person.

अल्प मेधसः alpa medhasah ( अल्पबुद्धेः, अल्पप्रज्ञस्य ) of small understanding, foolish.

यस्य yasya ( यस्य गृहे ) whose (house).

| | |
|---|---|
| अनश्नन् | anas'nan ( अभुञ्जानः ) without eating food or without experiencing. |
| वसति | vasati, dwells. |
| ब्राह्मणः | Brâhmaṉah A Brâhmin. |
| गृहे | gṛihe, in the house. |

In the house of what man of small understanding, a Brahmin dwells fasting, this (sin of non-feeding him) takes away all his hopes and expectations, good possessions and righteousness, the fruits of religious and charitable deeds, and sons and cattle.

MANTRA 9.

तिस्रोरात्रीर्यदवात्सीर्गृहे मे

ऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः ।

नमस्तेऽस्तु ब्रह्मन् स्वस्तिमेऽस्तु

तस्मात्प्रति त्रीन् वरान् वृणीष्व ॥ ९ ॥

अन्वयः—मे गृहे यत ( यस्माद्धेतोः ) हे ब्रह्मन् नमस्यः अतिथिः त्वं तिस्रो रात्रीः अवात्सीः, नमः ते अस्तु, स्वस्ति मे अस्तु, तस्माद्धेतोः त्रीन् वरान् प्रति ( उद्दिश्य ) वृणीष्व ॥

वृत्तिः—एवंवृद्धैरुक्तोमृत्युः नचिकेतसमुवाच ( तिस्रोरात्रीर्यदवात्सीरिति) मेगृहे यस्माद् हेतोर्हे ब्रह्मन्न मस्कारार्हो ऽतिथिस्त्वं तिस्रोरात्रीरभुञ्जान एव अवात्सीरित्यर्थः (नमस्ते इति) स्पष्टोर्थः (तस्मादिति) तस्माद्धेतोर्मह्यंस्वस्ति यथास्यादित्येवमर्थं त्रीन् वरान् प्रति। उद्दिश्य वृणीष्व

**प्रार्थय तव लिप्साभावेऽपि मदनुग्रहार्थमनशनरात्रिसमसंख्याकान् त्रीन् वरान् वृणीष्वेत्यर्थः ।**

तिस्रः tisrah, three.
रात्रीः râtrîh (दिन त्रयं) nights, three days.
यत् yat (यस्मात्) as, because.
अवात्सीः or त् avâtsîh or °t (उषितवान् असि, वासम् अकार्षीत्) thou hast dwelt.
गृहे grihe, in house.
मे me (मम) my.
अनश्नन् anas'nan (अभुंजानः सन्) not eating.
ब्रह्मन् Brahman (हे ब्रह्मन्) O Brâhmana !
अतिथिः atithih (सन्) a guest.
नमस्यः namasyah (नमस्कारार्हः, नमन योग्यः) venerable, worthy of salutation, honorable.
नमः namah, salutation, hail.
ते te (तुभ्यं) to thee.
अस्तु astu (भवतु) let be.
ब्रह्मन् Brahman ! O Brahmana !
स्वस्ति svasti (भद्रं, मङ्गलं, an indeclinable), prosperity, welfare.
मे me (मह्यं) to me.
अस्तु astu, let be.
तस्मात् tasmât, therefore (because you dwelt without food three nights, and so I became guilty) or tasmât prati तस्य प्रतीकाराय "in order to remedy the evil effect of that."
प्रति prati, for each (night); or (प्रतीकाराय) in order to remedy.
त्रीन्. trîn, three.

वरान् varân, boons ( अभिप्रेतार्थ विशेषान् ).

वृणीष्व vrinîshva ( प्रार्थयस्व, संभजस्व, स्वीकुरु ) ask, elect, choose, take for thyself.

Because in my house, O Brahmana! thou an honorable guest hast dwelt for three nights (without food), therefore let there be salutation to thee and peace to me; therefore three boons, one for each night, ask.

MANTRA 10.

शान्तसङ्कल्पः सुमना यथा स्याद्
वीतमन्युर्गौतमो माभि मृत्यो ।
त्वत्प्रसृष्टं माभिवदेत् प्रतीत
एतत्त्रयाणां प्रथमं वरं वृणे ॥ १० ॥

अन्वयः—हे मृत्यो शान्तसंकल्पः सुमनाः वीतमन्युः गौतमः यथा मां अभि ( प्रति ) स्यात्; त्वत् प्रसृष्टं मा अभि ( मां प्रति ) प्रतीतः सन् वदेत्, एतद् त्रयाणां प्रथमं वरं वृणे ॥

वृत्तिः—एवं प्रार्थितो नचिकेतास्त्वाह ( शान्तसंकल्प इति ) हे मृत्यो मत्पुत्रो यमं प्राप्य किंकरिष्यतीति मद्विषय-चिन्तारहितः प्रसन्नमनाः । मामभि मांप्रति मम पिता गौतमः वीतरोषश्च यथास्यादित्यर्थः । किंच ( त्वत्प्रसृष्टमिति ) त्वया गृहाय प्रेषितं मा अभि मां प्रति प्रतीतः, यथापूर्वं प्रीतः सन्वदेत् । यद्वाअभिवदेत्, आशिषं प्रयुञ्ज्यात् । अभि-वदतिनाभिवादयत इतिस्मृतिषु अभिवदनस्य आशीर्वादे-प्रयोगात् ( एतदिति ) स्पष्टोर्थः ॥

शान्त-संकल्पः sânta-sankalpa*h* ( उपशान्तः संकल्पो यस्य मां प्रति or मदनिष्टे शान्तसंकल्पो यस्य ) calm of thought; having no anxiety as regards me, *i.e.*, my father should be free from anxiety on my account—not troubled with the thought "how is my son faring in Yama's abode"; free from doubts (regarding my fate).

सुमनाः sumanâ*h* ( प्रसन्नमनाः, शोभनमनस्कः ) good-hearted, kind, pleased in mind.

यथा yathâ, so, as that.

स्यात् syât, he may be.

वीत-मन्युः vîta-manyu*h* ( विगत रोषः, अपगतः कोपः ) free from anger.

गौतमः Gautama*h* ( मम पिता ) Gautama (my father).

मा अभि mâ abhi ( मां प्रति ) towards me.

मृत्यो mrityo ( हे मृत्यो ) O Death.

त्वत्-प्रसृष्टं tvat-prasrishtam (त्वया विनिर्मुक्तं प्रेषितं गृहं प्रति, or त्वया प्रेषितं ) by thee discharged or permitted or sent back or dismissed (towards home).

मा mâ ( माम् ) me.

अभिवदेत् abhi-vadet ( आशिषं प्रयुञ्ज्यात् ) bless (me), greet. [or मा अभि = मां प्रति towards me, वदेत् he may speak, as one who recovered his memory].

प्रतीतः pratîta*h* ( प्रत्यभिज्ञानवान्, लब्धस्मृतिः ) assured in mind, remembering, assured of (soul-identity not thinking that the corpse has been obsessed by some elemental, and thus may not shun me, as people

ordinarily do in cases of persons recovering from death) R. यथा पूर्वं प्रीतः "with the old affection".

**एतत्** etat ( प्रयोजनं) this. or ( एतं)

**त्रयाणां** trayânâm, of the three.

**प्रथमं** prathamam, first ( आद्यं )

**वरं** varam, boon.

**वृणे** vṛine ( प्रार्थयेयं ) I ask or choose.

O Death ! so that my father Gautama be calm of thought, pleased in mind, free from anger towards me, and that he may greet me with old affection, when sent back by thee, this is the first of the boon I ask.

MANTRA 11.

यथा पुरस्ताद्भविता प्रतीत
औद्दालकिरारुणिर्मत्प्रसृष्टः ।
सुखꣳ रात्रीः शयिता वीतमन्युस्
त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥ ११ ॥

अन्वयः—यथा पुरस्तात् प्रतीतः भविता औद्दालकिः आरुणिः मत् प्रसृष्टः गतमन्युः ( सन् उत्तरा अपि रात्रीन् ) सुखंशयिता ( सुखनिद्रां प्राप्स्यति, ) मृत्युमुखात् प्रमुक्तं त्वां दर्शिवान् सन् ॥

वृत्तिः—एवमुक्तोमृत्युः प्रत्युवाच (यथापुरस्तादिति) यथा-पूर्वं त्वयि हृष्टो भविता। उद्दालक एव औद्दालकिः। अरुण-स्यापत्यमारुणीः द्व्यामुष्यायणोवा उद्दालकस्यापत्यं । अ-रुणस्यगोत्रापत्यमितिवार्थः । मत्प्रसृष्टः, मदनुज्ञातः, मदनु-गृहीतः सन् । मदनुग्रहादित्यर्थः । ( सुखमिति ) त्वयिगत

मन्युः सन् उत्तरा अपिरात्रीन्सुखंशयिता। लुट्। सुखनिद्रां-प्राप्स्यतीतियावत्॥ दर्शिवान् दृष्टवान् सन्नित्यर्थः। क्वसन्तोयं शब्दः। दृशेश्चेतिवक्तव्यमिति क्वसोरिट्। छन्दसो द्विर्वचनाभावः। मत्प्रसृष्टमिति द्वितीयान्तपाठेप्रेषितं त्वामिति योजना॥

यथा yathâ, as.

पुरस्तात् purastât (पूर्वम्, or ग्रामान्तरात् आगतः) before M. or a person coming back from sojourning in another city (पुरः-city.)

भविता bhavitâ (भविष्यति) will be.

प्रतीतः pratîtah (प्रतीतवान् सन्, पित्राप्रत्यभिज्ञातः) assured or recognised. R. with old affection.

औद्दालकिः Auddâlakih (उद्दालकस्य अपत्यं or उद्दालक एव) the son of Uddâlaka; or Uddâlaka.

आरुणिः Arunih (अरुणस्य अपत्यं or अरुणायाः) the son of Aruna or Arunâ (mother). Son of two fathers, according to Sankara. The son of the father called Uddâlaka and the mother called Arunâ, according to Madhva. R. Of the clan or Gotra of Aruna.

मत्-प्रसृष्टः mat-prasrishtah (मदनुग्रहात्, मया अनुज्ञातः or मत्-प्रेषितः भवान्) through my favor, or (when you will be) sent back by me.

सुखं sukham (प्रसन्न मनाः) peacefully, with tranquil mind.

रात्रीः râtrîh, nights.

शयिता sayitâ (स्वप्ता, शयानोभविता) will sleep.

| | |
|---|---|
| वीत-मन्युः | vîta-manyu*h*, free from anger |
| त्वां | tvâm, thee. |
| ददृशिवान् | dadṛiśivân ( दृष्टवान् ) R reads दर्शिवान्, seeing, having seen. |
| मृत्यु-मुखात् | mrityu-mukhât ( मृत्यु गोचरात्, यममुखात् ) from the mouth ( or proximity) of Death. |
| प्रमुक्तं | pra-muktam, freed fully. |

As he was pleased with thee before, so with old affection Auddalaki Aruni will be (inclined towards thee). Through my favor, he will have pleasant sleep in (future) nights, free from anger towards thee, seeing thee freed from the mouth of death.

(You) being dismissed by me, will be recognised (by your father), as (a person returning home) from another city. The son of Uddâlaka will be free from anger, having seen thee freed fully from the jaws of death.

### MANTRA 12.

स्वर्गे लोके न भयं किञ्चनास्ति
न तत्र त्वं न जरया बिभेति ।
उभे तीर्त्वाऽशनायापिपासे
शोकातिगो मोदते स्वर्गलोके ॥१२॥

अन्वयः—स्वर्गे लोके किंचन भयं नास्ति, हे मृत्यो यत्र त्वं न प्रभवसि । न जरया बिभेति ॥ उभे अशनाया-पिपासे तीर्त्वा, शोकातिगः स्वर्ग-लोके मोदते ॥

वृत्तिः—नचिकेता वरं द्वितीयं प्रार्थयते ( स्वर्गेलोक इत्यादिनामन्त्रद्वयेन ) अत्रस्वर्गशब्दो मोक्षस्थानपरः । यथाचैत-

तथोत्तरत्र वक्ष्यते । हे मृत्यो त्वं तत्र न प्रभवसि । जरायुक्तः सन् न बिभेति । जरातो न बिभेति । तत्र वर्तमानः पुरुष इति शेषः ॥ ( उभे इति ) अशनाया बुभुक्षा । अत्रापि स्वर्गशब्दो-मोक्षस्थानपरः ।

स्वर्गे svarge (M. स्वर्गशब्दिते भगवल्लोके R. अत्र स्वर्ग शब्दो मोक्ष-स्थानपरः ) In the heaven (the loka of Vishnu) R. Svarga is equivalent to Moksha here.

लोके loke, world

न na, not

भयं bhayam, fear (from disease &c.)

किंचन kin chana ( किंचिदपि M. किमपि ) not the least,

अस्ति asti, is

तत्र tatra, there (the Heaven-World)

त्वं tvam (मृत्यो, M. त्वं च नासि, शिक्षकस्सन् ) Thou (O Death, art not there because thou being the Teacher art on another plane.) R. प्रभवसि thou dost not rule there.

न na, not.

जरया jarayâ, by decay or on account of old age.

बिभेति bibheti, is afraid ( M. तल्लोकगतः ) *i.e.*, the inhabitant thereof.

उभे ubhe, both.

तीर्त्वा tîrtvâ ( अतिक्रम्य ) crossing over, leaving behind.

अशनाया-पिपासे asnâyâ-pipâse, hunger and thirst.

शोकातिगः sokâtiga*h* ( शोकं अतीत्य गच्छति, M. शोकामतिक्रान्तस्सन् ) out of the reach of sorrow, being above sorrow, free from mental pain.

मोदते modate ( हृष्यति, M. सुखमनुभवति ) rejoices, experiences pleasure.

स्वर्ग-लोके svarga-loke (दिव्ये M. पुनरुक्तिरादरार्था) in the heaven world. (The repetition of the word "heaven-world," is either for the sake of showing honor to it; or to point out that this svarga-loka is not the Vishnu-loka, but the popular well-known swarga-loka, which lasts for a Manvantara).

In Heaven-world there is no fear. O Death, thou art not there and decay does not frighten. Crossing over both hunger and thirst, the sorrow-transcended rejoices in Heaven-world.

MANTRA 13.

स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो
प्रब्रूहि तꣳ श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्त
एतद्द्वितीयेन वृणे वरेण ॥ १३ ॥

अन्वयः—हे मृत्यो स त्वं स्वर्ग्यं अग्निं अध्येषि, तं मह्यं श्रद्दधानाय प्रब्रूहि; स्वर्गलोकाः ( परमपदप्राप्ताः ) अमृतत्वं भजन्ते । एतद् द्वितीयेन वरेण वृणे ॥

वृत्तिः—( सत्वमिति ) पुराणादिप्रसिद्धसार्वज्ञ्यत्वं स्वर्गप्रयोजनमग्निं जानासि। स्वर्गादिभ्यो यद्वक्तव्य इति प्रयोजनमित्यर्थैयत । स्थण्डिलरूपाग्नेः स्वर्गप्रयोजनकत्वंच उपासनाद्वारेति उत्तरत्रस्फुटम् । श्रद्धधानाय=मोक्षश्रद्धा-

वते। स्वर्गलोकेन तव किं सिध्यतीत्यत्राह, (स्वर्ग लोका इति) स्वर्गोलोकोयेषां ते। परमपदं प्राप्ता इत्यर्थः। परंज्योतिरूपसंपद्य स्वेनरूपेणाभिनिष्पद्यंत इति "देश-विशेषविशिष्टब्रह्मप्राप्तिपूर्वकत्वात्स्वरूपाविर्भावलक्षणमोक्ष-शब्दिता मृतत्वस्येतिभावः" (एतदिति) स्पष्टम्॥

स sa, he ( प्रसिद्धः ) } *i. e*, your honour.
त्वं tvam, thou ( मृत्युः ) }

अग्निं agnim ( M. अग्निनामकं]हरिं ) Fire : the God Hari under the designation of Agni.

स्वर्ग्यं svargyam ( स्वर्गलोकस्य प्राप्तिसाधनंभूतं, M. स्वर्ग-साधनं ) that leads to heaven, which is the means of attaining heaven. R. स्वर्ग प्रयोजनं that whose purpose is Heaven. The affix य is added by the Vârtika to Panini V. I. 111.

अध्येषि adhyeshi ( स्मरसि, जानासि ) thou rememberest, knowest.

मृत्यो mrityo ( हे मृत्यो ) O Death !

प्र-ब्रूहि pra-brûhi ( कथय ) tell, fully speak.

तं tam, that or this (the Fire on the altar which is called Hari.)

श्रद्दधानाय sraddadhânâya ( श्रद्धावते ) to the faith-ful. R. To me who desires moksha.

मह्यम् mahyam ( स्वर्गार्थिने ) to me (who desires heaven. M. Not merely because it leads to heaven, that this Fire-sacrifice should be learnt; but because it further leads to Mukti also, as follows).

स्वर्गलोकाः swarga-lokâ*h* ( स्वर्गो लोको येषां ते परंपदप्राप्ताः ) the heaven-world-dwellers. M. Those who live for

one Manvantara in the Svarga world, and obtain afterwards Mukti there) R. Those who have reached the highest state aud have attained the form of Highest Luminousity—the true form of Self.

अमृतत्वं amṛitatvam ( अमरणतां, देवत्वं; M. मुक्तिं ) immortality, Deva-hood, Mukti or liberation. R. The state preliminary to Brahm-attainment, the state of having the same form as Vishnu.

भजंते bhajante ( प्राप्नुवन्ति ) reach, attain.

एतद् etad, ( अग्नि विज्ञानं, एतं ) this (science of Fire.)

द्वितीयेन dvitîyena, (M. द्वितीयं ) by the second, or second.

वृणे vṛine ( प्रार्थये ) I choose, I ask.

वरेण varena (M. ( वरं ) by the boon.

O Death ! thou verily knowest the Heavenly Fire ; teach that to me who have faith. The dwellers of Heaven world enjoy immortality. This through the second boon I choose.

MANTRA 14.

प्र ते ब्रवीमि तदु मे निबोध
स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।
अनन्तलोकाप्तिमथो प्रतिष्ठां
विद्धित्वमेतन्निहितं गुहायाम् ॥ १४ ॥

अन्वयः—ते प्रब्रवीमि, तद् उ मे ( मम उपदेशात ) निबोध ॥ हे नचिकेतः स्वर्ग्यं अग्निं प्रजानन् (त्वं) अनन्तलोकाप्तिं अथः प्रतिष्टां ( लभस्व ) ॥ एतं गुहायां निहितं त्वं विद्धि ॥

वृत्तिः—एवमुक्तो मृत्युराह ( प्रतेब्रवीमीति ) प्रार्थितवते तुभ्यं प्रब्रवीमि । व्यवहिताश्चेति व्यवहितप्रयोगः । मम

उपदेशाज्जानीहीत्यर्थः । ज्ञानस्य फलं दर्शयति । ( स्वर्ग्यमग्निमिति ) अनन्तस्य विष्णोर्लोकस्तत्प्राप्तिम् । तद्विष्णोः परमंपदमित्युत्तरत्रवक्ष्यमाणत्वात् । अथो तत्प्राप्त्यनन्तरं प्रतिष्ठां अपुनरावृतिं च लभत इति शेषः । तद् ज्ञानस्येदृशसामर्थ्यं कथं सम्भवतीति मन्यमानं प्रत्याह ( विद्धीति ) ब्रह्मोपासनाङ्गतया एतद् ज्ञानस्य मोक्षहेतुत्वलक्षणमेतत्स्वरूपं गुहायां निहितमन्ये न जानन्ति । त्वं जानीहीतिभावः । यद्वा ज्ञानार्थस्य विधेलाभार्थकत्व सम्भवात् । अग्निं प्रजानंस्त्वम् । अनन्तलोकाप्तिंप्रतिष्ठां लभस्वेत्युक्ते हेतुहेतुमद्भावः सिद्धो भवति । प्रजानन् । लक्षणहेत्वोरिति शतृप्रत्ययः ॥

| | |
|---|---|
| प्र | pra, (an upasarga, qualifying ब्रवीमि. Placed out of context as a Vaidika form). |
| ते | te ( तुभ्यं ) to thee. |
| ब्रवीमि | bravîmi ( प्रवच्मि ) I tell : explain. |
| तद् | tad, that. |
| उ | u, ( यत् ) which (M. एव ) alone (thou hast asked) |
| मे | me, ( ममवचसा M. मत् सकाशात ) from me or from my (words). |
| निबोध | ( बुध्यस्व एकाग्रमनाः सन् M. जानीहि ) understand (with concentrated mind), know, learn. |
| स्वर्ग्यम् | svargyam, ( स्वर्गायहितं, स्वर्गसाधनं ) heavenly, leading to heaven. |
| अग्निम् | agnim (M. चितस्थं अग्निनामकं हरिं ) Agni, or the God Hari. |
| नचिकेतः | Nachiketa*h* ( हे नचिकेतस् ) O Nachiketa ! |

| | |
|---|---|
| प्रजानन् | prajânan, ( विज्ञातवान् अहं सन् ) (I) knowing R. Thou knowing (this fire, wilt reach endless worlds). |
| अनन्त-लोकाप्तिं | ananta-lokâptim, (स्वर्गलोकफलप्राप्तिसाधनम् M. अनन्तस्य विष्णोर्लोकस्याप्तिम् आप्तिसाधनं ) the means for the attainment of the un-ending world or the Heaven-world: or the world of Vishnu. Lit. Infinite world-attainment. |
| अथो | atho, ( अपि, M. किंच ) also, moreover. R. after reaching the Heaven-world. |
| प्रतिष्ठाम् | pratishṭhâm, ( आश्रयं जगतो विराड्रूपेण तमग्निं, M. सर्वलोकप्रतिष्ठाहेतुं ) support (of worlds in the form of Virâṭ); the cause of the maintenance of all worlds. R. अपुनरावृत्तिं च लभते Non-return to Samsâra: fixity. |
| विद्धि | viddhi, ( जानीहि ) know. |
| त्वम् | tvam, thou |
| एतं | etam, this (fire) |
| निहितं | nihitam (स्थितं M. नितरां स्थितं ) placed, completely placed, M. M. hidden. |
| गुहायां | guhâyâm, ( विदुषां बुद्धौ M. सर्वप्राणिहृदयगुहायां ) in the cavity, in the Buddhi of the Wise, in the cavity of the heart of all creatures. M. M. in darkness. |

I tell thee, that verily from me learn thou. O Nachiketa*h* knowing this Heavenly Fire, which leads to the eternal world, (get thou) then fixity. Know thou it to be placed in the cavity.

## MANTRA 15.

लोकादिमग्निन्तमुवाच तस्मै
याइष्टका यावतीर्वा यथा वा ।

स चापि तत्प्रत्यवदद् यथोक्त-
मथास्य मृत्युः पुनरैवाह तुष्टः ॥ १५ ॥

अन्वयः—तं लोकादिं अग्निं तस्मै उवाच ॥ याः इष्टकाः यावतीः वा यथा वा स च अपि तत् यथोक्तम् प्रत्यवदत् ॥ अथ अस्य ( शिष्यस्य ग्रहणसामर्थ्यदर्शनेन ) सन्तुष्टः ( सन् ) मृत्युः पुनर् एव आह ॥

वृत्तिः—अनन्तरं श्रुतिवाक्यं ( लोकादिमग्निमिति ) लोकस्यादिं हेतुं स्वर्ग्यमितियावत् । तमग्निमुवाच । यल्लक्षणा इष्टकाश्चेतव्याः । यत्सङ्ख्याकाः । येन प्रकारेण चेतव्याः । तत्सर्वमुक्तवानित्यर्थः । यावतीरिति । पूर्वसवर्णश्छान्दसः । ( सचापीति ) सच नचिकेताः तत् । श्रुतं सर्वं तथैवानूदितवानित्यर्थः ( अथास्येति ) शिष्यस्यग्रहणसामर्थ्यदर्शनेन संतुष्टः सन् मृत्युः पुनरप्युक्तवान् ॥

लोकादिं lokâdim ( लोकानाम् आदिं प्रथमशरीरित्वाद् M. सर्वलोकानाम आदिम् कारणभूतं) the world beginning, MM the beginning of all the worlds (because of its being the first embodied), or the beginning of all worlds, as being their cause, R. The cause of the worlds.

अग्निं agnim. The fire or Hari.

| | |
|---|---|
| तम् | tam ( प्रकृतं नचिकेतसा प्रार्थितं M. चितिस्थं अग्निनामकं हरिं ) that (fire about which Nachiketa had questioned) or Hari who is in the heart and called Agni. |
| उवाच | uvâcha ( उक्तवान् मृत्युः ) he (Yama) said. |
| तस्मै | tasmai ( नचिकेतसे ) to him (Nachiketa). |
| याः | Yâh, what. |
| इष्टकाः | ishṭakâ*h* ( चेतव्याः स्वरूपेण M. देवताः ) bricks (to be put in forming the altar); M. or Devatas (to be invoked). |
| यावतीः | Yâvatî*h* ( संख्यया M. यावत् संख्याकाः ) how many (in number : *i. e.*, 360.) |
| वा | vâ or, and |
| यथा वा | Yathâ vâ ( चीयतेऽग्निर्येन प्रकारेण M. यादृशपरिमाणवा ) and how (they are to be placed) or how (much they should be in quantity). |
| स | sa, He (Nachiketas) |
| च | cha, and |
| अपि | api, also |
| तत् | tat, that (which was told by Yama). |
| प्रत्यवदत् | praty-avadat ( प्रत्ययेन अवदत् मृत्युच्चारितवान् M. अनूदितवान् ) uttered again, repeated. |
| यथोक्तम् | Yatha-uktam ( यत्नेन ) as it had been told (to him by Yama) |
| अथ | atha ( तस्य प्रत्युच्चारणेन M. अनुवादानन्तरं ) then (because of his aptness in repeating it, or after the repetition). |

अस्य asya ( नचिकेतसः ) (pleased) with him (Nachiketas)

मृत्युः mrityu*h* ( यमः ) The Death or Yama

पुनरेव आह punar eva âha, again then said (in order to give another boon over and above the three.)

तुष्टः tushṭa*h*, M. ( संतुष्टः ) pleased.

He told him that Universe-cause Fire, what bricks, and how many, and how. He also, repeated that as told. Then Death being pleased with him again said (to him).

## MANTRA 16.

तमब्रवीत्प्रीयमाणो महात्मा
वरन्तवेहाद्य ददामि भूयः।
तवैव नाम्ना भविताऽयमग्निः
सृङ्काञ्चेमामनेकरूपाङ् गृहाण ॥ १६ ॥

अन्वयः—प्रीयमाणः महात्मा ( मृत्युः ) तं ( नचिकेतसं ) अब्रवीत् । भूयः तव ( तुभ्यं ) वरं अद्य इह ददामि । तव एव नाम्ना अयं अग्निः ( प्रसिद्धः ) भविता । इमाम् अनेकरूपाम् सृङ्काम् गृहाण ॥

वृत्तिः—( तमब्रवीदिति ) सन्तुष्य महात्मना मृत्युः नचिकेतसमब्रवीत् । पुनश्चतुर्थं वरं ददानि । प्रयच्छानीति । किं तत् । तत्राह ( तवैवेति ) मयोच्यमानोऽग्निस्तवैवनाम्ना नाचिकेत इति प्रसिद्धो भविता । विचित्रां सृङ्कां शब्दवतीं रत्नमालां स्वीकुर्वित्यर्थः ।

तम् tam ( नचिकेतसं ) to him (Nachiketas.)

अब्रवीत् abravît, (he) said.

प्रीयमाणः prîyamânah ( प्रीतिमनुभवन् M. प्रीतिमान् सन् सन्तुष्य ) pleased, M. M. being satisfied (at finding him an apt pupil) R. Being satisfied.

महात्मा Mahâtmâ ( अक्षुद्रबुद्धिः M. महामनाः ) the Great Souled, M. M. the generous: the high-minded.

वरं varam ( चतुर्थं ) a (fourth) boon. M. त्वयादन्यं

तव tava ( तुभ्यं ) to thee.

इह iha (प्रीतिनिमित्तं M. चितिविषये) here (because I am pleased with thee) or here (relating to the Fire altar).

अद्य adya ( इदानीं ) today, now.

ददामि dadâmi ( प्रयच्छामि ) I give R. ददानि "Let me give."

भूयः bhûyah ( पुनः ) another (other than the three.)

तव tava ( नचिकेतसः ) thy (Nachiketa)

एव eva, alone.

नाम्ना nâmnâ ( अभिधानेन M. नाचिकेताग्निरित्येवंरूपेण) by name (known or called after thy name, as Nâchiketâgni).

भविता bhavitâ ( भविष्यति ) will be (famous) or M. भवतु let it be.

अयम् ayam, this (whose bricks &c. have been detailed above.)

अग्निः agnih, ( इष्टकाचितरूपोऽग्निः ) fire.

सृङ्कां srinkâm (शब्दवतीं रत्नवतीं मालां, M. कण्ठमालां) garland, tinkling jewelled neck-lace : chain or अकुत्सितां गतिं कर्ममयीम् (this honoured) Path (the Path of karma.)

च cha, and

इमाम् imâm, this.

अनेकरूपाम् anekarûpâm ( विचित्रां M. बहु रूपां स्वर्णमयीं ) of many colours, wonderful, variegated. M. golden. Multi-form.

गृहाण grihanâ (स्वीकुरु) take, accept.

Being pleased, the high-minded Death spoke to him :— " Let me give thee here another boon to-day. By thy name alone this fire will be (known among men.) Accept this multiform Path (of Karma.")

MANTRA 17.

त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं
त्रिकर्म्मकृत्तरति जन्ममृत्यू ।
ब्रह्म जज्ञं देवमीड्यं विदित्वा
निचाय्येमां शान्तिमत्यन्तमेति ॥ १७ ॥

अन्वयः — त्रिणाचिकेतः त्रिकर्मकृत् त्रिभिः सन्धिम् एत्य जन्ममृत्यू तरति । ब्रह्मजज्ञं देवं ईड्यम् विदित्वा इमाम् निचाय्य अत्यन्तं शान्तिं एति ॥

वृत्तिः—पुनरपि ( त्रिणाचिकेत इति ) त्रिणाचिकेतः । अयंवावयः पवत इत्याद्यनुवाकत्रयाध्यायी । त्रिकर्मकृत्= यजनाध्ययनदानकृत्, पाकयज्ञहविर्यज्ञसोमयज्ञकृद्वा ॥ त्रिभिः=त्रिरनुष्ठितैरग्निभिः । सन्धिं परमात्मोपासनेन सम्ब-

न्थम् । एत्य प्राप्य जन्ममृत्युतरतीत्यर्थः । करोतितद्येनपुन र्नजायत इत्यनेनैकार्थ्यात् । एवमेवच्चायंमन्त्रः । त्रयाणामेव चेवमिति सूत्रेभाष्ये ॥ त्रिभिरित्यसन्धिमिति निर्दिष्टमंगीभूतं परमात्मोपासनमाह (ब्रह्मजमिति) अयंमन्त्रः। विशेषणाच्चे- तिसूत्रभाष्ये । ब्रह्मजः जीवः ब्रह्मणोजातत्वात्, ब्रह्मजज्ञं= जीवज्ञं, तंदेवमीड्यं विदित्वा जीवात्मानमुपास्य ब्रह्मात्म- कत्वेनावगम्येत्यर्थः । इति विवृतम् । देवशब्दस्य परमात्म- वाचितया जीवपरयोश्चैक्या सम्भवात् । अत्रदेवशब्दस्य परमात्मात्मकत्व पर्यन्तोर्थ इति भाष्याभिप्रायः ॥ निचाय्य ब्रह्मात्मकं स्वात्मानं साक्षात्कृत्य । इमाम् । त्रिकर्मकृत्त- रतीतिपूर्वमन्त्रनिर्दिष्टां संसाररूपानर्थशान्तिमेतीत्यर्थः ॥

त्रिणाचिकेतः Tri-nâchiketaḥ (त्रिकृत्वो नाचिकेतोऽग्निश्चितोयेन स or तद् विज्ञानस्तदध्ययनस्त दनुष्ठानवान् ॥ M. नचिकेतसोयं नाचिकेतः ॥ "नाचिकेतसः" इति वक्तव्ये छान्दसः सलोपः ॥ त्रयोनाचिकेता- यस्य असौ-त्रिनाचिकेतः ॥ त्रिवारानुष्ठित नाचिकेतनामाग्निचयनः पुमान् ) He who has performed *thrice* the Nachiketas fire-sacrifice; or he who is its thrice master—*i. e.*, who *knows*, who *studies* and who *practises* this sacrifice. M. The proper grammatical from is Nachiketasah; the elision of स is a Vedic irregularity. He who has *thrice* performed this fire- sacrifice.

त्रिभिः tribhiḥ. ( मातृपित्राचार्यैः M. वेदैः ) with the three (father, mother and teacher), or M. with the three (Vedas or the Vedas, Rik, Yajush and

Saman, or the Vedas, the Smritis and the Shishtachara. (the customs of the good men) and also the three proofs *i. e.*, Direct Perception, Inference and Revelation. R. With the three Fires.

**एत्य** ( प्राप्य ) having obtained.

**संधिम्** Sandhim ( संधानं, संबन्धं, मात्रादि अनुशासनं यथावद् प्राप्य M. वेदत्रयाविरुद्धोवर्तते, वेदत्रयोक्तमार्गेण भगवन् तत्वादिकं जानन् ) union, (the Eternal Triad) relationship *i.e.*, he who has been properly taught and brought up by his father, mother and teacher : M. He who follows the three Vedas and knows the three Principles (God, the Jiva, and the Matter) as taught in the three Vedas.

**त्रिकर्मकृत्** tri-karma-krit ( इज्याध्ययनदानानां कर्ता M. यज्ञ दानतपः कर्ता ) three-duty-done. M. *i. e.*, who has performed the three duties *i. e.*, sacrifice, study (or austerity) and alms-giving R. who has performed the three sacrifices called Pâka yajna, Havir yajna and Soma yajna.

**तरति** tarati ( अतिक्रामति M. मुक्तोभवति passes over, crosses over—becomes free from ; MM over comes.

**जन्म मृत्यू** Janma mrityû, birth and death.

**ब्रह्मजज्ञं** Brahma-ja-jnam ( ब्रह्मणो हिरण्यगर्भात् जातः=ब्रह्मजः ॥ ब्रह्मजश्च असौ ज्ञश्च=ब्रह्मजज्ञः ॥ सर्वज्ञः M. ब्रह्म=वेदः ॥ तत्र व्यक्तत्वाद् ब्रह्मजः=विष्णुः ॥ जानाति इति ज्ञः=सर्वज्ञः ) the Brahmâ—born and omniscient. The All-knowing child of Hiranygarbha. M. The Veda-revealed-all-knower *i.e.* the omniscient Vishnu. M.M. Fire which knows (or makes us

know) all that is born of Brahman. R. Brahma-born is the Jîva. He who knows or rules the Brahma-born is Ishvara.

देवं devam ( द्योतनाज् ज्ञानादिगुणवन्तं M. क्रीडादिगुणविशिष्टं ) God (because he illumines all, knows all, or because he sports in all, the whole universe is whose play-ground), divine. R. The supreme self, the God.

ईड्यम् î*d*yam ( स्तुत्यं ) worshipped, praised (by Brahmâ &c.) M. M. venerable. R. should be adored.

विदित्वा viditvâ ( शास्त्रतः M. साक्षात्कृत्य ) having known (through scriptures) or directly realised. M.M. learnt. R. Having known that the jîvatmâ is the worshipper and the God the worshipped,

निचाय्य nichâyya ( दृष्ट्वा च आत्मभावेन M. विचार्य ) R. Having *realised*, discriminated, having seen (as identical with one's self); having reflected over. M.M. understood. G. T. seven hundred and twenty is the number of ishtakas in a year, during the morning and evening sacrifice. One should meditate thus "I am that Fire worshipped daily, morning and evening." R. Having realised his self as part of Brahm, or indwelt of Brahm, or animated by Him.

इमाम् imâm ( स्वबुद्धि प्रत्यक्षां, बुद्धिरुपासनातया साक्षात् कृतां M. वेदादि उक्तां पूर्वोक्तरजन्ममृत्युत्तरणरूपां ) this (realised in one's Buddhi; realised through the meditation in Buddhi ;) or M. this (taught in the vedas &c.)

शान्तिं *sântim* ( उपरति ) peace.

अत्यन्तं atyantam ( अतिशयेन ) M.M. everlasting, extreme.

एति eti ( प्राप्नोति ) goes to, attains, obtains (the status of a Virâj by uniting knowledge (jnâna) with karma).

The performer of three Nachiketas sacrifice, the performer of three karmas, having attained union with the three, crosses over birth and death. Having (more over) known (that) the Ishwara should be worshipped (by the jîva), because He rules (this jiva) the child of Brahmâ, and having realised (his self as part of Brahm) he attains this extreme peace.

MANTRA 18.

**त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वांश्चिनुते नाचिकेतम् । स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥ १८ ॥**

अन्वयः —यः त्रिनाचिकेतः विद्वान् एतद् त्रयं विदित्वा एवं नाचिकेतं चिनुते, स पुरतः मृत्युपाशान् प्रणोद्य शोकातिगः स्वर्गलोके मोदते ॥

**वृत्तिः—( त्रिणाचिकेत इति ) त्रिणाचिकेतः उक्तार्थः । त्रयमेतद्विदित्वा । ब्रह्मजज्ञंदेवमीड्यमितिमन्त्रनिर्दिष्टं ब्रह्मस्वरूपं, तदात्मकस्वात्मस्वरूपं । त्रिभिरेत्य सन्धिमिति निर्दिष्टाग्नि स्वरूपं च विदित्वा गुरूपदेशेन शास्त्रतोवा य एवं विद्वान् । एतादृशार्थत्रयानुसन्धानपूर्वकं नाचिकेतमग्निं यश्चिनुते । सः मृत्युपाशान् । रागद्वेषादिलक्षणान**

पुरतः शरीरपातात्पूर्व्वमेवप्रणोद्य तिरस्कृत्य । जीवद्दशायामेवरागादिरहितः सन्नित्यर्थः ( शोकातिगो मेदते: स्वर्गलोके इति ) पूर्व्वमेवव्याख्यातम् ॥

वृत्तिः—यः एतां चितिं ब्रह्मात्मभूतां विदित्वा ब्रह्मात्मकस्यस्वरूपतयाऽनुसन्धायनाचिकेतमग्निं चिनुते । स एव ब्रह्मात्मकस्वात्मानु सन्धानशालीसन् अपुनर्भवहेतुभूतं यद्भगवदुपासनम् । तदनुतिष्ठति । तत्रश्चाग्नौभगवदात्मकस्वात्मानुसन्धानपूर्वक्रमेव चयनम् । त्रिभिरेत्यसन्धिं त्रिकर्मकृत्तरतिजन्ममृत्यू इति पूर्वमन्त्रेभगवदुपासनद्वारामोक्षसाधनतया निर्दिष्टत्वात् । नान्यदिति भावः । अयच मंत्रः केषु चित्कोशेषुनदृष्टः । कैश्चिद्व्याकृतश्च । अथापि आचार्यादिभिरेव व्याख्यातत्वान्नप्रक्षेपशंका कार्या ॥

त्रिणाचिकेतस् Trinâchiketas. The Tri-Nâchiketa M M He who knows the three Nâchiketa fires ( M. त्रिवारं नाचिकेताग्निमनुतिष्ठन् ) He who has thrice performed the Nachiketa fire-sacrifice.

त्रयम् trayam ( यथोक्तं या इष्टका यावतीर्वा यथा वा M. या इष्टका इत्यादिनोक्तं विष्णुरूपेष्टकादेवता इष्टकासंख्या इष्टकापरिमाण रूपं त्रयं ) the three (the bricks, their number, and arrangement. M. the nature of Devatas, their number, and attribute.) R. The three *i.e.* the essential nature of Brahm; the esential nature of one's Self; and the Heavenly Fire.

एतद् etad, this.

विदित्वा viditvâ ( अवगम्य ) having known (R. through being taught by a Guru or through scriptures.)

यः yah : who.

एवं evam ( आत्मरूपेण M. ज्ञातप्रकारेण ) thus ( by identifying the Fire with the Self ) or ( by knowing it thus ). R. with the above three-fold knowledge of God, Jîva and Fire.

विद्वान् vidvân, the wise.

चिनुते chinute ( निर्वर्तयति ) accomplishes M.M. piles up.

नाचिकेतं nâchiketam. The Nâchiketa dhyana (or mode of contemplation) (M. who makes the Fire-altar in the shape of a falcon, tortoise &c. with the bricks).

स sa, he.

मृत्युपाशान् mrityu-pâsân ( अधर्म-अज्ञान-राग-द्वेषादि लक्षणान् M. यमपाशान् ) the death-ropes (or lassoos). M.M. chains of death (in the shape of sin, ignorance, attraction and repulsion).

पुरतः puratah, ( अग्रतः, पूर्वमेवशरीरपातात् M. पुरस्थितान् ) from before, first, before the falling off of the body or the passions &c.; placed in front (or in the heart).

प्रणोद्यः pranodyah, ( अपहाय M. प्रणुद्य, निरस्य ) thrown off, shaken off.

शोकातिगः sokâtigah ( मानसैर्दुःखैर्वर्जितः M. शोकान् अतिक्रान्तः ) passed over sorrow M.M. beyond the reach of grief. See verse 12.

मोदते modate ( सुखं अनुभवति ) rejoices.

स्वर्गलोके svarga-loke ( वैराजे, विराडात्मस्वरूपप्रतिपत्त्या M. हरि लोके ) in the Heaven-world (the world of Virâj or Hari).

That wise Three-fold-performer of Nachiketas sacrifice, who having known these three, thus raises the Nachiketas fire, he having thrown off the toils of death, lurking in the heart, sorrow—transcended rejoices in the Heaven-world.

MANTRA 19.

**एष तेऽग्निर्नचिकेतः स्वर्ग्योयमवृणीथा द्वितीयेन वरेण। एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरन्नचिकेतो वृणीष्व ॥ १९ ॥**

अन्वयः—( हे ) नचिकेतः ! ते एषःस्वर्ग्यः अग्निः ( उपदिष्टः ) यं द्वितीयेन वरेण अवृणीथा ॥ जनासः ( जनाः ) तव एव नाम्नां एतं अग्निं प्रवक्ष्यन्ति नचिकेतः ! तृतीयम् वरं वृणीष्व ॥

वृत्तिः—( एषतेऽग्निर्नचिकेतः स्वर्ग्यः ) उपदिष्ट इतिशेषः ( यमवृणीथाद्वितीयेनवरेण ) स्पष्टोर्थः । किंच ( एतमग्निमिति ) जनास्तवैवनाम्ना एतमग्निं प्रवक्ष्यन्तीत्यर्थः । ( तृतीयमित्यादि ) स्पष्टोर्थः ।

एषः eshah, this.

ते te ( तुभ्यं ) to thee M.M. thy. ( M. कथित इति योज्यं ) "Has been said"—should be supplied.

अग्निः agnih ( वरः ) fire (other boon.)

नचिकेतः Nachiketah ( हे नचिकेतः ) O Nachiketah !

स्वर्ग्यः Svargyah ( स्वर्गसाधनं ) heavenly, means of reaching svarga.

यम् yam ( अग्निं ) which (fire.)
अवृणीथाः avriṇîthâh ( प्रार्थितवान् असि M. वृतवान् असि ) then didst ask or choose.
द्वितीयेन dvitîyena ( M. द्वितीयं ) by the second.
वरेण varena ( M. वरं ) gift, boon.
एतम् etam, this.
अग्निम् agnim, fire.
तव tava, thy ( त्वत्संबधिनमेव ) *i.e.* by thy name alone.
एव eva, only.
प्रवक्ष्यन्ति pravakshyanti ( प्रवदिष्यन्ति ) will call or M.M. proclaim.
जनासः janâsah ( जनाः, आज् जसेरसुक् ) people. This is an archaic form of plural.
तृतीयं tritîyam, third.
वरं varam, boon.
नचिकेतः nachiketáh, O Nachiketâh.
वृणीष्व vriṇîhshva, ask. Choose.

O Nachiketas! to thee this Heavenly Fire has been taught, which thou didst ask by thy second boon. The people will call this Fire by thy name alone. O Nachiketas ask the third boon.

## MANTRA 20.

**येयम्प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥ २० ॥**

अन्वयः—प्रेते मनुष्ये या इयम् विचिकित्सा एके अस्ति इति, एके च न अयम् अस्ति इति ( कथयन्ति ); त्वया अनुशिष्टः एतत् विद्याम् ( विजानीयाम् ); वराणाम् एषः तृतीयः वरः ॥

वृत्तिः—प्रकृतमनुसरामः नचिकेता आह (येयंप्रेत इति) अत्ताचराचरग्रहणादित्यधिकरणे इमं मन्त्रं प्रस्तुत्येत्थंहि भगवताभाष्यकृता । अत्रपरमपुरुषार्थ रूपब्रह्मप्राप्तिलक्षण मोक्ष याथात्म्यविज्ञानायतदुपायभूत परमात्मोपासनपरावरात्मतत्वजिज्ञासया अयं प्रश्नः क्रियते । एवं च येयं प्रेत इति न शरीरमात्रवियोगाभिप्रायम् । अपितु सर्वबन्धविनिर्मोक्षाभिप्रायम् ।

या yâ ( सर्वसाधारणा ) that which (well-known)

इयम् iyam, this

प्रेते prete ( मृते मनुष्ये; M. मृतपुरुषे मुक्ते च मनुष्ये ) *about the dead* M. The wise say that the God rules even the "dead" *i. e.*, the men who have become fully liberated ; the unwise say the "liberated" are not under God's control. R. *Going off*, departing, *i. e.*, the falling off of all bondages, *i. e.*, *in the state of Moksha, about the liberated.*

विचिकित्सा vichikitsâ ( संशयः M. सन्देहः ) doubt. Enquiry.

मनुष्ये manushye, among men ( मुक्ते च मनुष्ये ) about (the liberated) men. "Man" includes all living beings.

अस्तिइति एके asti iti eke. "Is" say one. S. There is an *Atma*, beyond the body, the senses, the Manas and the Buddhi—(above the physical, astral, mental and Buddhic planes). M. Some wise one say that there is a *God* who rules and

controls the souls of the dead persons and of those who are liberated.

न अयम् अस्ति इति च एके — na ayam asti iti cha eke "and it is not" (say) the others. S. There is no such separate entity as the Atmâ besides the above four. M. That God is not the ruler of souls.

एतद् — etad. This (doubt or knowledge) M. ( विचिकित्साविषयं, मृत मुक्तजीवयोः प्रेरकस्वरूपं ) M. This subject of doubt regarding the director of the dead and liberated souls.

विद्याम् — vidyam ( विजानीयाम् )—I may know

अनुशिष्टः — anusishṭa*h* ( ज्ञापितः M. उपादेष्टस् सन् ) taught, informed, instructed.

त्वया — tvayâ, by thee.

अहं — aham, I.

वराणां — vara*n*âm, among the boons.

एषः — esha*h*, this (boon, this teaching or instruction about the dead and liberated.)

वरः — vara*h*, boon. Madhva's reading is वृतं "chosen."

तृतीयः — tritîya*h* ( अवशिष्टः ) third.

There is this doubt, when a man dies, some say that the soul exists, others that it does not. May I know this being taught by thee. Among the boons this is the third.

M. Over the dead and the (liberated) men, some say that there is (a God who controls); others say that He is not. (Therefore) this doubt (has arisen in my mind). May I know this being taught by thee: of the boons, this is the third.

R. There is this doubt regarding (the condition of the) man in moksha, some say there is (still an Individual self or form or centre in Moksha) other say it is not. May I learn, being taught by thee, this (true nature of Moksha). Of the boons this is the third.

MANTRA 21.

देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेयमणुरेष धर्मः । अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥ २१ ॥

अन्वयः—अत्र देवैः अपि पुरा विचिकित्सितं, हि न सुविज्ञेयं, एषः धर्मः अणुः । ( हे ) नचिकेतः अन्यं वरं वृणीष्व ॥ मा मा उपरोत्सीः । मा ( मां ) एनं अतिसृज ॥

वृत्ति—एवं मुक्तस्य रूपं पृष्टो मृत्यु रुपदिश्यमानार्थस्य अलिगह्नतयापारं प्राप्तुमप्रभवते मध्येपतयाशवेनोपदेष्टव्य-मिति मत्वाह ( देवैरत्रापीति ) बहुदर्शिभिरपि देवैरस्मि-न्मुक्तात्मस्य रूपेविचिकित्सितम् । संशयतम् । ( नहीति ) आत्मतत्वं ननुज्ञानमितिसूक्ष्मोधर्मः । समान्यतो धर्मएवदु-र्ज्ञानः । तत्राप्ययंदुर्ज्ञान इति भावः ( अन्यंवरमिति ) स्पष्टोऽर्थः (मांमोपरोत्सीरिति) मामा इति निषेधेवीप्सीयां द्विर्वचनम् । उपरोधं माकार्षीः । एवं मामतिसृ जमुञ्च ।

देवैः Devaih. By the Gods ( बहुदर्शिभिः ) by the sages who look into the far.

अत्र atra ( एतस्मिन् वस्तुनि त्वत् कृत प्रश्नविषये ) here (with regard to this matter, the subject of thy ques-

tion). R. मुक्तात्मस्वरूपे Regarding the form of the liberated self or Mukti.

अपि api, also.

विचिकित्सितं vichikitsitam ( संशयितं M. संदिग्धम् ) doubtful, undecided.

पुरा purâ ( पूर्वं ) before.

न na, not

हि hi, verily or ( यतः ) because.

---

सुज्ञेयम् suj*n*eyam or सुज्ञे यः ( सुष्ठु ज्ञेयं श्रुतमपि प्राकृतैर्जनैः सुखेन ज्ञेयः ) well-understood or easily understood.

अणुः a*n*u*h* ( सूक्ष्मः M. अव्यक्त स्वभावः ) atomic, subtle. unmanifested nature.

एष esha, this (relating to Atmâ)

धर्मः dharma*h* ( M धारकत्वाद् धर्मः = भगवान् ) nature, or Lord (because he upholds or is Dhâraka of all, therefore He is called Dharma).

अन्यं anyam ( असंदिग्धफलं प्रेतनियामकोपदेशवरात् . अन्य ) other

वरं varam, boon.

नचिकेतः nachiketas, O Nachiketas

वृणीष्व varnîshva, choose,

मा mâ ( मां ) me R. The two मा both denote negation in a strong and double form, do not press, *ie.* do not press, do not press.

मा ma, not.

उपरोत्सीः uparotsî*h* ( उपरोधं मा कार्षीः ) (do not) press (as the creditor presses the debtor to discharge the promise).

अति ati, an upasarga to be connected with सृज

मा mâ ( मां प्रति ) to me, not. M.

सृज srija or अति-सृज ( विमुञ्च एनं वरं ) let go (this boon)

एनम् enam (वरं) this boon. According to Madhva the phrase अति &c. is the reply of Nachiketas. He explains मातिसृजैव mâtisrijaivam = एवं (उक्त प्रकारेण) thus (in the above mentioned method) मा अतिसृज ( अतिसर्जनं परित्यागं मा कार्षीः ) do not resile or go back (on thy promise O Death).

About this by the Devas, even of ore there was a doubt; because it is not easy of understanding. This nature is subtle. O Nachiketas! ask another boon, do not press me; let go to me this (boon).

M. This (question) was left undecided even by the gods of old, because it is not of easy comprehension. This God is subtle (of unmanifested nature). O Nachiketas! ask any other boon. Do not press me. Free me from this (pledge of answering thee.)

### Mantra 22.

**देवैरत्रापि विचिकित्सितं किल त्वञ्च मृत्यो यन्न सुविज्ञेयमात्थ । वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥ २२ ॥**

अन्वयः—( नाचिकेताः उवाच )। मृत्यो! अत्र किल निश्चितं पुरा देवैः अपि विचिकित्सितं, यत् त्वं च न सुविज्ञेयम् आत्थ ( कथयसि ) अस्य ( तत्त्वस्य ) वक्ता च त्वादृक् ( त्वत्सदृशः ) अन्यः न लभ्यः, ( अतः ) एतस्य तुल्यः अन्यः कश्चित् वरः न ( अस्ति इति मन्ये ) ॥

वृत्तिः- एवमुक्तो नचिकेता आह ( देवैरत्रापिविचिकित्सितं किलेति ) स्पष्टोऽर्थः ( त्वंचेति ) त्वंचमृत्योन सुज्ञेयनिति यदात्मस्वरूपमुक्तवान् । ( वक्तेति ) त्वादृक् त्वादृश इत्यर्थः अन्यत्स्पष्टम् ।

देवैः devaih, by the Gods

अत्र atra, in this (matter)

अपि api, even

विचिकित्सितं vichikitisitam, doubtful or had doubted

किल kila, verily. (I hear from Thee O Death that Devas had even doubted about it)

त्वं tvam, thou.

च cha, and.

मृत्यो mrityo O Death

यत् yat ( यस्मात् ) because

न na, not.

सुज्ञेयं sujneyam, well-understood.

आत्थ âtha ( कथयस्यतः *M.* वदसि ) sayest. S. I hear from thee that Devas even doubted as regards this, and because thou O Death also sayest that the truth about self is not well-understood, therefore I ask it from thee. M. Do not try to resile from thy promise. why? Because, O Death! thou even sayest that Devas doubted it and it is not well understood, therefore &c.)

वक्ता vaktâ, speaker

च cha, and

